ष्टदेशान्तादेशे समति मित्रत्वं नो स्यादिति। यत्राष्टमस्तस्मात्तक्षात्मित्रत्वाधिक्यं वाच्यम् यत्राष्टमो भवेत्तस्मा
१.ल त्तक्षात्मित्रत्वाभावो वाच्यः। नात्र संदेहः अथ प्रयाणारमाह यदि कोपि द्विमस्तथा सात्त्विकस्य तद्भव
वासिनः प्रक्रमकारयेदितं तत्राह तदा सप्तमगृहे पश्येत्। यदि प्रवेशी भवेद्यथा इमे ॰ ॰ ॰ ॰ तदा स्त्री
कारणं समीचीनं वर्त्तते। यद्यपि सौरि ॰ रूपी ग्रहो वा चन्द्रो कोणे तथापि विवाहः स्यात्स्त्री तिष्ठेत् तथा
सात्त्विकारणमपि समीचीनं वर्त्तते तत्कारणेन सत्त्वं प्राप्नुयात् तद्वत्प्रवासी विदेशे यस्मिन् स्थले
तिष्ठति ततः कुत्रापि नो गच्छेत् अथ पादि सप्तमे तिष्ठेन्सो भवेद्यथा इमे ॰ ॰ ॰ ॰ तदा विवाहो नो
स्यात् तस्याः स्त्रियोऽवस्या निषिद्धतरा वाच्या। यदि वक्रो रूपी ॰ भवेत्तदा तु विवाहादौ निषेधकारणं
समीचीनम्। कृते दोषः क्लेशाधिक्यं प्राप्नुयात् तथा सात्त्विकारणं वक्र निषिद्धतरं वर्त्तते किंचिदपि
फलं नो प्राप्नुयात्। यदि चैत्कारयेत्तदाशीघ्रतया एव भावः स्यात्। द्वयोर्मध्ये केनापि कारणेन विग्र

परत्वंस्थापितेन अथ यद्येकस्मिन्पक्षे ऽशुभस्थिरो भवेत्तथा द्वितीयपक्षे शुभद्विस्वभावो भवेत्तदा पत्र शुभद्विस्व
भावस्तस्मात्तस्मात्पक्षान्मित्रत्वं स्यात् अथ यद्येकस्मिन्पक्षे ऽशुभद्विस्वभावस्तथा द्वितीयपक्षे ऽशुभस्थिरो भ
वेत्तदा पत्राशुभस्थिरो तस्मात्पक्षान्मित्रत्वं स्यादिति ब्रूयात् वक्तृतस्तु यस्मिन्पक्षे शुभो भवेत्तस्मात्पक्षान्मि
त्रत्वं स्यादिति ब्रूयात् वक्तृतस्तु यस्मिन्पक्षे शुभो भवेत्तस्मात्पक्षान्मित्रत्वं स्यात्। तथा यस्मिन्पक्षे ऽशु
भो भवेत्तस्मात्पक्षाद्दुष्टत्वं स्यादिति वाच्यम् नात्र संदेहः पृच्छकमनोभिलषितयोः पक्षौ पृष्टौ कं मया
अथ पादिकोपि पृष्टेकस्य पक्षान्मित्रत्वाधिकवर्त्तेत इत्यात आह तदा प्रथमगृहे सप्तमगृहे च पश्येत्
प्रथमगृहं पृच्छकपक्षं ज्ञेयम्। तथा सप्तमगृहं मनोभिलषितस्य पक्षं ज्ञेयम्। यत्र शुभो भवेत्तस्मि
त्रत्वं नो वांछतीति। यत्राशुभो भवेत्तन्मित्रत्वाधिकं स्यापयतितस्य पक्षान्मित्रत्वाधिकं वाच्यम्। यद्विस्व
स्वतृतीय ३ पंचम ५ नवमे ९ कादश ११ गृहेष्वन्यादेशरूपकारयेत्तदा मित्रत्वाधिकं वाच्यम् शेष

१०७ यदिदै त्यार्चितो मंदगो लोहि तरूपी भवेत्तदा सा स्त्री तरुणी वर्त्तते । यदि वाग्मी वाक्पगुः
रूपी भवेत्तदा सा स्त्री वृद्धा वर्त्तते । यदि वक्रो वा पातो वा सौरि रूपी भवेत्तदा सा स्त्री कुरूपा हीनल राम्पातः
क्षणा वर्त्तते । यदि शूरिर्वा तीक्ष्णांशुः कविः विधुः बोधन सौम्य रूपी भवेत्तदा सा स्त्री
२ अभ्यंतरस्थानि भग्ना वर्त्तते केनापि भग्ना नो कृता । यदि शीतांशुः दैत्यार्चिः तारः मंदगः रू
पी भवेत्तदा सा स्त्री वा प्रोषितापरत्वभग्ना वर्त्तते । नात्र संदेहः अथ ग्रंथान्तरमाह अथ यदि को
पि पृच्छेत्सा स्त्री तरुणी वर्त्तते वा वृद्धेत्यत आह तदा समममगृह्य पश्येत् यदि दैत्यार्चितः कवि
र्लो हितो विधु रूपी भवेत्तदा सा ऽतीवतरुणी वर्त्तते यदि शूरिरूपी भवेत्तदा तदेव फ
लं वाच्यम् अथ यदि वक्रः पातः सौरि रूपी भवेत्तदा सा स्त्री वृद्धा वर्त्तते शेषरूपिभिः

ग्नो भवेत् । तद्दूतप्रवासी देशान्तरे यस्मिन् स्थले तिष्ठति ततः प्रचलयेत् अथ यदि सप्तमे स्थिरो भवेद्यथा २
मे ३ २ ३ ३ तदा स्त्रियोः वस्त्रावलिष्टा वाच्या परन्तु पाणिग्रहणं स्थिरं तया भवेत् । एतेषां मध्ये वोध
नो ३ विवाहप्रश्ने वक्रः समीचीनो वर्त्तते तथा कारणसारी मध्यमौ वाच्यौ । तद्दूतप्रवासी विदेशे स्वस्थ
ले तिष्ठति परन्तु स्वापितेन अथ यदि द्विस्वभावो भवेत् यथा इमे ३ ६ ९ १२ तदा स्त्रीप्रश्ने विवाहः
स्यात् परन्तु सा स्त्री नो तिष्ठेत् यदि तेषु ग्राः रो भवेत्तदा विवाहे निषेधकरणं समीचीनम्
स्त्रीकरणे दोषः । यदि तेषु मंद ३ गो भवेत्तदा विवाहः स्यात् कन्ते सा स्त्री तिष्ठेत् । तथा सादिक
वं रणामध्येवाच्यं । तद्दूतप्रवासी परदेशे स्वस्थले परिषेदितो द्विग्नमनसा तिष्ठति नात्र संदेहः
अथ यदि कोपि पृच्छेत् सा स्त्री कीदृशी वर्त्तते इत्यत आह तदा सप्तमगृहे पश्येत् । यदि शूरै वी

सा स्त्री न रूपी सुंदरी निर्भग्ना च वाच्या यदि भग हे दै ÷ स्त ८ ग हे कौ ३ समागत स्याद्दपि १

१० लेषु पश्येत्। यदि सप्तम मंगल हे ग्वार ÷ रूपी भवेत्तथा ऽष्टम मंगल हे विधुः ३ समागतः स्यात्तदापि न देवफल

ब्रूयात्। अथ यदि सप्तम मंगल हे शुभ निर्जमो भवे घ्यथा इमौ ÷ ÷ तदा सा स्त्री सुंदरी वर्त्तते तथा रूपी

३ स्याजीवनवृत्तिः समीचीना ऽस्ति परन्तु निर्भग्ना नास्ति। यदि सप्तम मंगल हे ऽशुभ निर्जमो भवे घ्य

था इमौ ÷ ÷ तदा सा स्त्री कुप्रकृतिका कठोरवचना तथा कुरूपा निषिद्ध जीवनवृत्तिका वा

च्या परन्तु निर्भग्नापि नास्ति (यदि सप्तम मंगल हे (शुभ निर्जमो भवे घ्यथा इमौ ÷ ÷ तदा सा स्त्री कु

प्रकृतिका कठोरवचना तथा कुरूपा निषिद्ध जीवनवृत्तिका वाच्या परन्तु निर्भग्नापि नास्ति) अ

थ यदि सप्तम मंगल हे शुभ निर्जमो भवे घ्यथा इमौ ÷ ÷ तदा सा स्त्री सुंदरी वर्त्तते तथा रूस्या जीवनवृ

त्तिः समीचीना ऽस्ति परन्तु निर्भग्ना नास्ति। यदि सप्तम मंगल हे ऽशुभ निर्जमो भवे घ्यथा इमौः

≡ ÷ स्थविरावाच्या यदिसप्तमगृहे शुभप्रवेशीभवेत्तदासाक्षीनिर्भग्नावाच्या शेषरूपिभिर्भग्ना। तस्याः स्थि
यो रूपिलक्षणादिकं रूपिस्वरूपैर्ब्रूयात् तथाचग्रन्थान्तरेप्युक्तं वर्त्तते यदिकोपिपृच्छेत्साक्षीदृष्टोवर्त्ततेवा
तरूणीत्यत आह तदासप्तमगृहे पश्येत्। यदिमंद ÷ गौवाशुभप्रवेशीवाशुभस्थिरोभवेत्तदासाक्षीतरूणी
तथानिर्भग्नावर्त्तते। यदिलोहितो ≡ वादैत्या ÷ स्थितोभवेत्तदापित्तदेवफलंब्रूयात् अथैषांविवरणम
ह यदिवाशुभप्रवेशीवा ऽशुभस्थिरोभवेत्तदासाक्षीतरूणीवर्त्ततेपरन्तुनिर्भग्नानास्ति अथप
दिनिर्गमोभवेद्यथाइमे ≡ ⁝ ÷ ÷ तदासाक्षीवृद्धाकेनापिभग्नीकृतावाच्या अथपरिश्रो
÷ वाशीतं ⁝ शुभैर्वेत्तदासाक्षीस्थविरावाच्याम् नात्रसंदेहः अथप्रकारान्तरमाह अथय
दिकोपिपृच्छेत्साक्षीतरूणीवर्त्ततेवावृद्धातथासुंदरीवर्त्ततेवाकुरूपेत्यत आह तदाप्रश्नम

तया सह संमेलनं तथापि तत्त्वं स्थिरस्वरूपं भविष्यतीति ब्रूयात्। परं तु सुगमभागेष
१०ला गमेवरूपिणं पश्येत् यदि शुभप्रवेशी वा शुभ स्थिरो भवेत्तदा तया सह संमेलनादिकमेतत्सर्वकाठिण्येन स्यादि
ति वाच्यम् अथ यदि स तिर्ज्जमो वा द्विस्वभावो भवेत्तदा तया स्त्रिया सह सदैव विरोधत्वं भविष्यतीति ब्रूया
त् किंतु नक्षत्रभेन नात्र संदेहः अथ कोपि विवाहार्थं तया स्त्रिया सह संध्यर्थं पृच्छेत्तदा तत्राह तदा
प्रथम १ चतुर्थ ४ सप्तम ७ पंचदश १५ षोडश १६ गृहेषु पश्येत् यद्येतेषु गृहेषु शुभप्रवेशिनः
स्युस्तदा विधुं रूपीष्टादशगृहं विहाय परमलेषु कुत्रापि समागतः स्यात्तदा विवाहः शीघ्रं तया ध्रुव
५ मेव स्यात्तथा स्त्रीपुंसोर्मध्ये मित्रत्वं संमेलनमपि वक्रतरं भवेत्। यदि तेषु गृहेषु अशुभप्रवेशिनः स्यु
स्तदा स्त्रीपुंसोर्मध्ये विरोधत्वं वक्रवारं कलहं चाहर्निशं स्यात्। अत्र प्रस्तरमलेषु विद्यमानेन विधु रम०
रूपिणा ध्रुवं विवाहे वाच्यं तथा तेषु गृहस्थेषु अशुभप्रवेशिषु सत्सु स्त्रीपुंसोर्मध्ये संमेलनादिकं ब्रूया
त् अथ यदि तेषु तिर्ज्जमाः स्युस्तथा विधुं रपि प्रस्तरमलेषु कुत्रापि नो समागतः स्यात्तदा विवाहः क

३ तदा सा स्त्री कुप्रकृतिका कठोरवचना तथा कुरूपा निषिद्धजीवनवृत्तिका वाच्या परं तु निर्भर्त्सापि नास्ति
अथ यदि सप्तमगृहे शुक्रो वा तीक्ष्णांशः वा कवि रूपी भवेत्तदा सा स्त्री सुन्दरी निर्भर्त्सा तथा शुभजीव
नवृत्तिका वाच्या यदि सौरि रूपी भवेत्तदा सा स्त्री निर्भर्त्सा वर्जिते परं तु सुन्दरी नास्ति तथा सुप्रकृतिका
नास्ति। अथ यदि सप्तमे ऽष्टमे च शुभः समागतः स्यात्तदा सा स्त्री निर्भर्त्सा वाच्या अथ शुभः सप्तमगृ
हे चेत्तदा सा स्त्री सुन्दरी तथा सुप्रकृतिका वाच्या अशुभश्चेत्तदा कुरूपा कुप्रकृतिका च वक्तव्या न
त्र संदेहः अथ यदि कोपि पृच्छेत् स्त्रिया सह संमेलनं भविष्यति वा विरोध मित्यत आह तदा प्रथ
मगृहरूपिणां सप्तमगृहरूपिणां गुणयेत् तांम्बा मुसत्कृरूपिणां प्रश्नारम्भे लग्नेषु पश्येत् यदि शुभ
गृहेषु समागतः स्यात्तदा स्त्रिया सह संमेलनं मित्रत्वं च भविष्यतीति ब्रूयात् यद्यशुभगृहेषु सम
गतः स्यात्तदा तया सह विरोधं वाच्यम् अथ यदि सप्तमगृहे शुभोऽशुभो वा नापि नो समागतः स्यात्तदा

हो भवेत् अथवा ये रूपिणो विवाहोपरि विचारं संकुर्वन्ति यदि ते रूपिणः प्रश्नारमलेषु समागताः स्यु
र॰ल॰ स्तदापि स्त्रीपुंसोर्मध्ये वक्रवादकलहः स्यात् नात्र संदेहः अथ यदि कोपि पृच्छेत् साक्षी कस्य कन्या व
र्त्तते इत्यत्र आह तत्र दासममग्रहे पश्येत् यदि वा स्मी ≡ वा शूद्रिरूपी ≡ भवेद्वा कविः रूपी भवेत्तदा सा
स्त्री कश्चित्तस्यात्रस्य कन्या वर्त्तते। ये सत्पात्राः सर्वजँभ्यः पवित्राः संध्यावंदनजपध्यानपरायणा
विप्राश्च अथ यदि तीक्ष्णांशुः ≡ वीरुह्मगुः ≡ रूपी भवेत्तदा सा स्त्री पृथ्वीपतेः कन्या वा कश्चिद्रा
5 ज्ञः कन्या वर्त्तते अथ यदि मंदगो ≡ वा सौरि ≡ रूपी भवेत्तदा सा स्त्री कश्चिच्छूद्रकस्य कन्या वा दास
स्य कन्या वर्त्तते एवं शेषरूपिणामपि वक्तव्यम् यथा पूर्वोक्तं मया रूपिणां विचाराशेषु तेन माऽजे
राशेषाणां कन्यावक्तव्या अत्र स्वल्पमेवोक्तं मयाऽपररूपिणां विचारं शास्त्रस्फुटे नैव ज्ञातव्यम् ८७

दाषिनो भवेत्। चेद्यदि विधुरूपी द्वादशगृहं विहाय परमल्लेषु कुत्रापि समागतः स्यात्तदा विवाहो भवेत्परं तु प
रिणामं न यास्त्रिया सह मित्रता स्यात् अथ यदि तेषु गृहेषु पापाः स्युस्तदा प्रवेशिन उक्तं फलं ब्रूयात् प
रं तु विधुरूपिणं विलोक्य अथ तेषु गृहेषु यदि द्विस्वभावाः स्युस्तदा निर्गमोक्तं फलं ब्रूयादत्रापि वि
धुरूपिणा अनुमानेन विवाहनं तु तद्भावे अथ यदि तेषु गृहेषु सर्वे मिश्रिताः स्युस्तदा ऽऽ धिक्योपरि
फलं वाच्यम् नात्र संदेहः अथ प्रथमगृहे यो रूपी भवेत्तस्य सर्द्व रूपी सप्तमगृहे समागतः
स्यात्तदा स्त्रीपुंसोर्मध्ये सख्यं नो भवेत्सदैव कलहः स्यात् तथा च कवादस्य अथ वा यो रूपी त्रयो
दशगृहे भवेत्तस्य सर्द्व रूपी यदि चतुर्दशगृहे समागतः स्यात्तदा तदेव फलं वाच्यम् अथ यदि स
लग्नु लग्नगृहे १५ मंदं ≐ गः समागतः स्यात्तदापि स्त्रीपुंसोर्मध्ये सख्यं नोः सदैव वक्रवादकल

१० ३ वाथो धन ३ रूपी भवेत्तदा सा स्त्री वैश्यस्य कन्या वा विदुषः कन्या वर्त्तते अथ यदि मिथुन ३ रूपी भ
वेत्तदा सा स्त्री वा निज व्यापारकर्त्तुः कन्या वर्त्तते । अथ यदि शीतांशुः ३ भवेत्तदा सा स्त्री हि शूद्रश्या
य स कन्या वर्त्तते अथ यदि वक्राः ३ वा पातरूपी ३ भवेत्तदा सा स्त्री नी च ज्ञाति धूर्त्तजनस्य
कन्या वर्त्तते नात्र संदेहः अथ यदि कोपि एकः स्त्रीपुंसोर्मध्ये कदापि भिन्नता भविष्यति वा
मैवहि तत्वमेव तथा स्त्री स्वपुरुषेण सह मित्रत्वं करिष्यति वानेत्यत आह तदा चतुर्थ
सप्तम ७ चतुर्दश १४ पंचदश १५ षोडश १६ गृहेषु पश्येत यदि तेषु गृहेषु शीतांशुः
वक्रः ३ पातः ३ रूपिणः समागताः स्युस्तदा तयोः स्त्रीपुंसोर्मध्ये शीघ्रतया भिन्नता स्यात्
अथवा कोपि निर्जन्मस्तेषु गृहेषु ४।७।१४।१५।१६ समागतः स्यात्तदापि तयोर्मध्ये भिन्न
ता भवेच्छीघ्रतया अथवा ५ भेद ३ समागतस्यात्तदापि स्त्रीपुंसोर्मध्येपि भिन्नता

नात्रसंदेहः अथ किंचिद्विशेषोच्यते तथाच ग्रंथान्तरेषूक्तं वर्त्तते यदि कोपि पृच्छेत्तस्याः स्त्रियः का
जातिरित्यत आह तदा समप्रश्नलग्ने पश्येत् यदि मंदगो ÷ वा सौरि ÷ रूपी भवेत्तदा सा स्त्री नीचज्ञातेः
शीलरहितस्य कन्या वर्त्तते अथ यदि आरो ÷ वा तीक्ष्णांशुरू ÷ पी भवेत्तदा सा स्त्री तस्या ज्ञातेः क
न्यायस्यां ज्ञातौ नियतेन्द्रियधर्म्माधिकारिणी भवेत् । यः पुरुषः परांशेनोगृह्णीयात्तस्य कन्या वाच्या
अथ यदि ज्ञगु ÷ वीन्लोहि ÷ तो भवेत्तदा स्त्री श्रेष्ठज्ञातेः कन्या वक्तव्या । अथ यदि दैत्या ÷ र्चि
तो वा कवि ÷ रूपी भवेत्तदा स्त्री तस्या ज्ञातेः कन्यायस्यां ज्ञातौ सदैव प्रसन्नतान्विता संध्यावं
दनजपध्यानपरायणा जनता जायन्ते अथ यदि वाग्मी ÷ वा शूरि रूपी ÷ भवेत्तदा सा स्त्री तस्या
ज्ञातेः कन्यायस्यां ज्ञातौ धर्म्मकर्म्मणि निरताः नरा निःसत्याः परांशेनोगृह्णीयुः अथ यदि सौम्यो ८

मित्रवैवक्रुतरस्यात्तत्र· यद्यष्टमो भवेत्तदा तयोः स्त्रीपुंसोर्मध्ये तथैवकाशृरहे
द्वयोः पक्षः

सप्तमगृहे चतुर्दशगृहे वा शुभनिर्जेशो भवेत्तदा तस्याः स्त्रीत्वपुरुषं नो बांछेत् यदि पंचमगृहे चंद्रो भवेत्तदा
तयोः स्त्रीपुंसोर्मध्ये द्वयोः परस्परं इष्टत्वं वक्रतरस्यात् नात्र संदेहः अथ प्रकारान्तरमाह तत्र पुरुषपक्ष
स्य इष्टकरूपस्य प्रथमगृहत्रयोदशगृहं च अथ यदर्थं इष्टं तितत्स्त्रीपक्षस्य सप्तमगृहं चतुर्दशगृ
हं चतुर्दशगृहं च अत्र एव प्रथम १ त्रयोदश १३ गृहे पुरुषस्य इष्टकरूपस्य ज्ञेयम् तथा सप्तम ७
चतुर्दश १४ गृहे स्त्रियो ज्ञेयः। यदि प्रथमगृहे सप्तमगृहे ऽथवा त्रयोदशे १३ चतुर्दशे च समं रूपीस
मागतः स्यात्तदा तयोः स्त्रीपुंसोर्मध्ये मित्रत्वं स्नेहदत्वं नो भवेत् अथ यदि पंचम दशमगृहे मंदः गौभ
वेत्तदा स्त्रीपुंसोर्मध्ये वकवाद कलहः स्यात् एवं स्वामित्वयोस्तथा इष्टकस्य सांगत्य पुरुषस्य
र्द्धरूपपुरुषः प्राचीनदृष्टैः सह फलं ब्रूयात् इष्टकस्य गृहन्तु प्रथमत्रयोदशाम् एतेषां गृहसप्तमच

भवेत् अथ यद्वा प्रथमगृहे रूपिणां सप्तमगृहे रूपिराशुरापेनाम्भाभुतस्वत्र रूपी यदि निर्जमरूपो भवेत्तथा
चतुर्दश १४ पंचदश १५ षोडश १६ गृहेषु निर्जमरूपिणा एवसमागताः सुस्तदा तयोः स्त्रीपुंसो
र्मध्ये ध्रुवं भिन्नतास्यात् अथ यदि तेषु गृहेषु ४।७।१४।१५।१६ शुभप्रवेशी वा शुभस्थिरः स
मागतः स्यात्तदा तयोः स्त्रीपुंसोर्मध्ये कदापि भिन्नता नो भवेत् यद्यशुभप्रवेशी वा ऽस्थिरो भ
वेत्तदा तद्दैवफलं वाच्यं परन्तु प्रत्यहमुभयोः स्त्रीपुंसोर्मध्ये क्लेशालं परिश्रमं वकवादकलहं
च स्यात् अथ यदि सप्तमगृहे रूपी वा चतुर्दशगृहे रूपी द्वितीयगृहे ऽन्यादेशा रूपं कारयेत्तदा
सा स्त्री स्वपुरुषेण सह ध्रुवं भिन्नत्वं कारयेत्। यदि प्रथमगृहे रूपी वा त्रयोदशगृहे रूपी सप्तमगृहे
तथा चतुर्दशगृहे ऽन्यादेशा रूपकारयेत्तदा सपुरुषः स्त्रिया सह भिन्नत्वं कारयेत् अथ यदि स

पुरुषः सदैवस्मात् अथ यदि सप्तमगृहे दैत्याः चिंतो भवेद्यवा कोपि नररूपी भवेत्तदा सपृच्छकपुरुषः सदैव वा
लकैः सह रत्यादिसुखं कारयेत् स्त्रीभिः सह कदापि नो कारयेत् उगंच जिंदा विन्दति यत्र पात्र पदं वा सतो वना त्रे
गताः पुंभिश्चेदुपपद्यते रतिसुखं कैनी दृशमादरः विश्वासा यदि पारशीघ्रकरितास स्त्रीरिणा काकथामूपालेज
मने सप्तमस्तमभनेवैरगंधमसंगतः १ अथ यदि सप्तमगृहे सौरिः रूपी भवेद्वा कोपि अशुभः समागतः स्या
त्तथा सप्तमगृहे शुभो भवेत्तदा प्रष्टा आदौ परस्त्रिया सह कुकर्म कारयेत् पश्चाद्विवाहितस्त्रिया सह रत्यादिसु
खं कारयेत् नात्र संदेहः अथ चोरज्ञानमाह यदि कोपि पृच्छेदेतेषां जनानां मध्ये कश्चौर इत्यत आह तेषां
तेषां मध्ये चौरो वर्त्तते वा नास्ति तदा तद्देशं समाश्रित्य रमलं पातयेत् । षोडशरूपिणा उत्पाद्य पश्चात्मातरं दु
हितरो गुणायेत् एवं चतुरो रूपिणा उत्पाद्य तेषां मातरं विरच्य हितीयपरमलं स्वर्गे कारयेत् तदा पेश्यते सौ
म्यरूपा कुत्र समागतो वर्त्तते तथा कीदृशाभ्या रूपिण्या मृत्युः सञ्जायातः अथ वा यास्मिन् गृहे सौम्यरूपी भवेत्त

तुर्दशम् यथोक्तफलं वाच्यम् नात्रसंदेहः अथ यदि कोपि पृच्छेत् स्वस्त्री स्वगोत्रकुटुम्बस्य कन्या वर्त्तते वाऽन्यकन्यापीय
त अत्राह तदा प्रश्नारम्भलेषु पश्येत् सप्तमगृह रूपी कस्मिन् गृहेऽन्वादेश रूपोऽस्ति यदि चतुर्थगृहे भवेत्तदा पृच्छक
पितृपक्षेषु कस्यचिद्गोत्रकुटुम्बस्य कन्या वर्त्तते यदि त्रयोदशगृहे भवेत्तदा पृच्छकमातृपक्षेषु कस्यचिद्गोत्रकुटुम्ब
स्य कन्या वर्त्तते। यदि द्वादशगृहेषु भवेत्तदा कस्यचिन्निषिद्धजनस्य कन्या वर्त्तते यः पृच्छकस्याज्ञाकारी स्नेहप्री
शेष त्यादिषु भवेत् एवं गृहेष्वन्वादेशे सति गृह गृहे शं फलं ब्रूयात् यद्यष्टम ८ द्वादश १२ त्रयोदश १३ गृहेषु स्या
त्तथाऽपरगृहेष्वपि चान्वादेशो भवेत्तदा स्वगोत्रकुटुम्बेभ्योऽन्यकस्यचित्परजनस्य कन्या वर्त्तते नात्रसंदेहः
अथ ग्रंथान्तरे किंचिद्विशेष वर्त्तते तदेवाह यदि सप्तमगृहेऽशुभो भवेत्तदा किमपि स्त्र्यादिसुखं तया स्त्रिया स
ह नो स्यात्। यदि सप्तमगृहे शुभो भवेत्तथा साक्षीभूतोपि शुभो यदि स्यात्तदा सर्वं स्त्र्यादिसुखं सम्यक्प्रकारे
ण तया स्त्रिया सह सदैव स्यात् अथ यदि सप्तमगृहे [illegible] भवेत् [illegible] नररूपी भवेत्तदा स पृच्छ

रमलं पातयेत्। तद्द्वे वयस्मिन्नमले ते रूपिणः स्युस्तत्स्थानस्थग्रहे स्वस्वस्मिन्नेव तत्समूहं चौरं जानीहि। एवं पुनः पुनः
कर्तव्यं यावत्सर्पतं चौरं प्राप्नुयात् यस्मिन्नामसमाप्तिस्ते रमलं पातिते ते रूपिणः स्युस्तत्स्थानस्थग्रहे षागमे पुरुष सन्निते
मेव चौरं जानीहि तस्मात्पुरुषाद्गुप्तमेन तत्तद्द्रव्यं याचयेत् अथ तस्य चौरस्य स्वरूपज्ञानार्थमाह तस्य चौ
रस्य रमलस्य प्रथमग्रहरूपिणं दशमग्रहरूपिणा गुणयेत् ताभ्यां यः उत्पन्नो भवेत्तेन रूपिणा चौरस्य सर्वस्व
रूपं ब्रूयात् अथ चौरज्ञानाय प्रकारान्तरमाह यदि कोपि पृच्छेद्देतेषां जनानां मध्ये कश्चौर इत्यत आह तदा
प्रश्नरमलस्य पंचमषष्ठसप्तम ७ ग्रहरूपिणां संख्यां कं गृहीत्वा समूहकारये तेषां जनानां स्वाग्रे पंक्तिं कृ
२। त्वा रमलपातयित्वा संख्यां कं गृह्णीयात्। तत्संख्यंकं स्वदक्षिणतस्तास्तजनपंक्तिं पुगणयेत् यत्रावसानं तस्मा
त्स एव चौरो ज्ञेयः नात्र संदेहः अथ प्रकारान्तरमाह यदि कोपि पृच्छेद्देतेषां जनानां मध्ये चौरो वर्तते वा
९ नास्तीत्यत आह तदा तद्देशं समाप्तिं तत्र रमलं पातयेत्। यदि तस्मिन्प्रश्नरमले आरोः बालो हि तत्र

स्मिन् गृहे प्रथमरमलमतेन कोऽरूपी स्थितः तं पश्येत् यदि प्रवेशी भवेत्तदा तस्मिन् जनसमूहे चौरो वर्त्तत इति ब्रू
यात् यदि निर्गमो भवेत्तदा तेषु जनसमूहेषु चौरो नास्ति। यदि प्रवेशी प्रस्तररमलेषु सप्तमाष्टम ७।८ गृहे चरू
पसमूहे कारयेत्तदा तेषु जनेषु द्रव्यहरचौरो वर्त्तत इति वाच्यम् यदि निर्गमो रूपसमूहं कारयेत्तदा तेषु ज
नेषु चौरो नास्ति अथवा तस्मिन् गुणकजद्वितीयरमले सौम्य ≡ सौरि ≡ आरं ÷ रूपिणामुसहसगृहेषु
समागताः स्युः कोऽर्थः सौम्यः ५।१०।२ हो सौरिर्द्वितीये नवमगृहे वा आरः प्रथमे १ षष्ठे वा स्यात्तदा प्रस्तारमष्ट
हृशेन रमलपातितं भवेत्स एव चौरस्तेनैव जनेन द्रव्यहारणं कृतमिति अतएव तस्माज्जनात् द्रव्येण छ
मतं प्रापयेत् अथ स्त्रचौरज्ञानार्थमाह तेषां जनानां द्विभागं कारयेत् स्त्रियस्पकत्र तथा पुरुषाश्चैक
त्र एवं द्विभागं कृत्वा पुनः पृथक् २ रमलं पातयेत् यस्मिन्नमले तेरूपिणः ≡ ≡ ÷ सप्तमसहसगृहागमे हे
पुरुषस्मिन्नेव समूहे चौरो ज्ञातव्य इति पुनस्तस्यापि समूहस्य द्विभागं कारयेत् तथैव तदुद्देशं समाप्तिपर्यन्तं पृथक् २

रूपीः कुत्रापि समागतः स्यात्तदा तेषु जनेषु चौरो वर्त्तते । यदि चेत्कुत्रापि नो समागतः स्यात्तदा तेषु ज
नेषु चौरो नास्ति नात्र संदेहः अथ प्रकारान्तरेण चौरस्फुटकरणमाह येषां येषां जनानामुपरि स्पृहा
भवेत्तेषां सर्वेषां द्विभागं कारयेत् पश्चात्तु दुद्देशसमाश्रित्य पृथक् २ रमलं पातयेत् । यदि रमलेषु द्वा
भ्यां प्रवेशिभ्यां सौम्य≡ रूपी समुत्पन्नः स्यात्तदा तेषु जनविभागेषु चौरो वर्त्तते (यदि द्वाभ्यां निर्जमाभ्यां
रमलेषु सौम्यरूपीः समुत्पन्नः स्यात्तदा तेषु जनविभागेषु चौरो वर्त्तते) यदि द्वाभ्यां निर्जमाभ्यां रमलेषु
सौम्यरूपीः समुत्पन्नः स्यात्तदा तेषु जनविभागेषु चौरो नास्ति एवं पुनः पुनः जनानां द्विभागं कृत्वा पृथ
क् २ रमलं यावत्समोसोत्पन्नत्वमूलेन तत्समूहे चौरं विज्ञाय तावत्पर्यन्तं कर्त्तव्यं यावच्चौरं प्रापयेत् ना
10 त्र संदेहः अथ चौरज्ञानार्थं प्रकारान्तरमाह येषां येषां जनानामुपरि स्पृहा भवेत्तान् सर्वान्नृत्वाग्रे चो
पवेशयेत् किं कृत्वा अर्द्धान्वामांगे ऽर्द्धान्दक्षिणांगे कृत्वा पश्चाद्रमलं पातयेत् तेषु रमलेषु पश्ये

कारयेत् पश्चाच्चोजनानन्दस्याग्रे उपवेशयेत् द्विभागं कृत्वा तास्मिन् समये रमलस्य मा ४
षोडशगृहरूपीः कृत्वा द्वादशरूपो वर्त्तते। यदि सम्मुखा द्वादशो रमलस्य दक्षिणांगे स्यात्तदा चौरो दक्षिणांगे वाच्यः
यदि सम्मुखा द्वादशो रमलस्य वामांगे स्यात्तदा चौरो वामांगे वाच्यः एवं पुनः पुनः कर्त्तव्यं यावच्चौरं प्राप्नुयात्
यदि सम्मुखा द्वादश उभयोस्मिन्नु पार्श्वे दक्षिणांगे वामांगे च स्यात्तदा पुनरपि रमलं पातयित्वा तस्य रमलस्य के
न्द्रगृह १।४।७।१० रूपिणां मातृगृहे विरच्य रमलमलेस्य मातरं गृहीत्वा गुणयेत्। एवं चत्वारि रूपाण्युत्पा
ग् द्य तेषां मातृगृहे विरच्य गुणाकार रमलं स्पर्शं कारयेत् पश्चात्तस्य रमलस्य चतुर्थगृहे पश्येत् यदि द्विस्वभावो
भवेत्तदा तेषु जनेषु चौरो नास्ति यदि स्थिरो भवेत्तदा तेषु जनेषु चौरो वर्त्तते। यदि निर्जमो भवेत्तदा द्विस्व
भावफलं वाच्यम् यदि प्रवेशी भवेत्तदा स्थिरवत्फलं ब्रूयात् अथ यदि कोपि पृच्छेद् तेषां समीपे तस्क
त वस्तु वर्त्तते वा नास्ति। तत्राह तदा प्रस्तार रमले षु पश्येत् सौम्य ≡ रूपी कीदृश्या मातृरूपिण्यां सम्मुख
त्वो वर्त्तते। यदि प्रवेशी भवेत्तदा तेषां समीपे चौरहृतवस्तु वर्त्तते। यदि निर्जमो भवेत्तदा तेषां समीपे चौर

रः पुरुषो वाच्यः। यदि स्त्रीरूपिणो वक्रतराः स्युस्तदा चौरो स्त्री वाच्या नात्र संदेहः अथ चौरस्य वयःक्रमज्ञानार्थमा
ह नवांशसप्तमगृहरूपिणात् अन्त्यादेशात् रूपं पश्येत्कुत्र वर्त्तते यदि सोऽन्त्यादेशो दिनगृहेषु कोर्थ मातृगृहेषु १।२।
३।४ स्यात्तदा चौरः कुमारः षोडशवर्षावधिको वाच्यः। यदि सप्तदिनगृहेषु कोर्थ दुहितृगृहेषु ५।६।७।८।
सोऽन्त्यादेशः स्यात्तदा चौरो युवा चत्वारिंशत् ४० वर्षावधिको वाच्यः यदि मासगृहेषु कोर्थ दौहित्रीगृहे
षु ९।१०।११।१२। सोऽन्त्यादेशः स्यात्तदा चौरः स्थविरः पंचाशवर्षावधिको वाच्यः। यदि वर्षगृहेषु को
र्थः साक्षीमूलगृहेषु १३।१४।१५।१६। सोऽन्त्यादेशः स्यात्तदा चौरो वृद्धो नवति ९० वर्षावधिको वाच्यः
एतद्वयोज्ञानं प्रत्यक्षस्थितेषु जनेषु स्वाग्रेषु चौरस्य कथितम् अथ परोक्षस्थितस्य चौरस्य तु वयोज्ञा
नं विपरीतमार्गेणाभ्यात्। तद्यथा यदि सोऽन्त्यादेशो मातृगृहेषु स्यात्तदा चौरो वृद्धो वाच्यः। यदि
दुहितृगृहेषु सोऽन्त्यादेशः स्यात्तदा चौरः स्थविरो वाच्यः। यदि दौहित्रीगृहेषु सोऽन्त्यादेशः स्यात्तदा

हृद्हृतद्रव्यंनास्ति नात्रसंदेहः अथयदिकोपिपृच्छेच्चौरेणरात्रौहृतंवादिनइत्यत्रआह तदाप्रश्नलग्नस्यप्रथ
मग्रहेपश्येत् यदिमेषमिथुनसिंहतुलाधनुःकुंभराशीनांरूपिणःसुप्तस्तदाचौरेणदिनेहृतमिति यदिवृषकर्क
कन्यावृश्चिकमकरमीनराशीनांरूपिणःसुप्तस्तदारात्रौचौरेणहृतमितिब्रूयात्। नात्रसंदेहः अथयदिको
पिपृच्छेच्चौरः पुरुषोवर्त्ततेवास्त्रीत्यत्रआह तदासप्तमगृहेपश्येत् पुरुषरूपीवर्त्ततेवास्त्रीरूपीः। तथाक्रमा
गतंमतेनतस्यरूपिणोगृहेदृष्टंवास्त्रीरूपीसमागतोवर्त्ततेवापुरुषः यद्युभयस्थलेपुरुषोभवेत्तदाचौरःपु
रुषोवाच्यः। यद्युभयस्मिन्स्थलेस्त्रीरूपीभवेत्तदाचौरःस्त्रीवाच्या यद्येकःपुरुषरूपीतथैकःस्त्रीचेत्तदातौ
स्वस्मिन्गुणितौकर्त्तव्यौ तावन्मात्रगुणान्तौयोरूपःस्यात्तंपश्येत्। यदिसस्त्रीभवेत्तदाऽस्त्रीचौरोवाच्यः। यदिस
नररूपीभवेत्तदापुरुषःचौरोवाच्यः नात्रसंदेहः अथप्रथ्यान्तरमाह तदाप्रश्नलग्नस्यसप्तमगृहेपश्ये
त्कोरूपीसमागतोवर्त्ततेस्त्रीरूपोवापुरुषरूपः तथायदिसप्तमस्थलेपुरुषरूपिणोवक्रगतयःसुप्तस्तदाचौ

क्षरमलेषु कुत्रचन्नैत इति द्रष्टव्यम् यदि आपोक्लिमग्रहेषु ३।६।९।१२। स्यात्तया सप्तमग्रहरूपी चतु
र्थग्रहे ऽन्यादेशरूपो भवेत्तदा चौरो ऽस्मिन्नेव नगरे स्वस्थाने तिष्ठति। यदि चतुर्थग्रहस्वामी सप्तमग्रहे
भवेत्तदा चौरस्तस्मिन्नेव स्थले तिष्ठति यतो वस्तु चौरितिं यानमिति अथ सप्तमग्रहे यो रूपीः सप्त
गतो वर्त्तते स यदि सप्तमग्रहस्वामी नो तथा चतुर्थग्रहस्वामी नाभवेत्तत्तु स एव सप्तमग्रहरूपी च
तुर्थग्रहे ऽन्यादेशरूपः स्यात्तदा चौरस्तस्मिन् स्थले गमनागमनं करोति कोपि नो जानाति यदि स
प्तमग्रहस्वामी तृतीयग्रहे नवमग्रहे चान्यादेशरूपं कारयेत्तदा चौरः कुत्रापि प्रचलितो वा कुत्रापि
स्वस्थाना ऽगतः यदि सप्तमग्रहस्वामी पञ्चमेग्रहे समागतः स्यात्तदा चौरहृद्वस्तुनः प्राप्तिर्महता क
ष्टेन स्यात् यदि दशमै १० कादश ११ ग्रह भवेत्तदा चौरहृद्वस्तुनः शीघ्रतया प्राप्तिः स्यात्। अथ
यदि सप्तमग्रहस्वामी प्रक्षरमलेषु कुत्रापि नो समागतः स्यात्तदा प्रक्षरमलस्य सर्वे रूपिणः पश्ये

चौरोयुवावक्तव्यः । यदिसाक्षीमूतनगृहेषुसोऽन्नादेशः स्यात्तदाचौरः कुमारोवाच्यः नात्रसंदेहः अथयदिकोपिप्र
छेत्तचौरः कोपिस्नेहीवर्त्ततेवाऽन्यइत्यतआह यदिसप्तमगृहरूपीः प्रथमगृहे१ वात्रयोदशगृहेऽन्नादेशरूपंक
ग० रयेत्तदाप्रष्टाएवचौरोवाकेनापिस्वकार्येणैवचोरितंतत् यथास्वकुटुम्बस्वगोत्रादयः । यदिद्वितीयगृहेसोऽन्नादे
शोभवेत्तदाप्रष्टुःसहायदातृचौरोज्ञेयोवाप्रष्टुराधीनजनाश्चौराज्ञातव्याः । यथाऽनुचरसेवकदासीदास
दयः यदितृतीयगृहेसोऽन्नादेशः स्यात्तदाप्रष्टुर्भगिनीभ्रातृगोत्रादयश्चौराज्ञातव्याः एवंचतुर्थादिष्वपि
गृहेष्वन्नादेशेनगृहाणांविचारांशैः फलंब्रूयात् नात्रसंदेहः तथाचग्रंथान्तरेप्युक्तम् यदिसौम्य ३ वो
धन ३ शीर्षांशाः ३ मंदगा ३ एषुचतुर्षुरूपिषुकोपिरूपी प्रथमगृहे समागमेत्तदाप्रष्टाएवचोरोज्ञेयो
वातस्यकोपिस्नेहीचौरः स्यात् । यदितेषुचतुर्षुकोपिरूपीचतुर्थगृहेसमागमेत्तदाऽन्यः कोपिचौ
रोज्ञेयः नात्रसंदेहः अथयदिकोपिप्रछेत्तचौरः कुत्रवर्त्ततइत्यतआह तदासप्तमगृहस्वामीय

पो ब्रह्मगृहाद्द्वितीयेसमागमेह्वाप्रथमगृहे १ योमुसल्लासस्थानंद्वितीयस्यावर्त्तनेतदामनोभिप्रा
यः कोर्थदासीदासचतुःपदाःपलायमानाश्चेत्स्वयमेवसमागच्छेयुः। यदिप्रश्नगृहेपुशानेरूपीभ
वेद्वातस्यप्रश्नरूपिणः शानिः स्वामीभवेद्वामंद ÷ गोभवेत्तदातमनोभिप्रायरूपदासीदासचतुःप
दंकोपिध्वंसमानयेत् अथप्रश्नरूपिणाऽन्यादेशश्चौरदासीदासचतुःपदानांविचारांशंददा
ति नात्रसंदेहः अथयदिकोपिपृच्छेत्सचौरएकोवर्त्ततेवाबहुरित्यत्र आह तदासप्तमगृहरू
पिणंपश्येत् यदिसएकस्मिन्गृहेऽन्यादेशरूपकारयेत्तदाचौरोह्येकजनोवर्त्तते यदिद्विगृहेऽ
न्यादेशरूपोभवेत्तदाचौरस्त्रिभिर्मानुषैर्बोध्यः। यदित्रिस्थलेऽन्यादेशोभवेत्तदाचौरश्चतुर्भि
र्जनैर्ज्ञातव्यः एवमग्रेपिवाच्यम् अथयदिसप्तमगृहरूपीः कुत्रापिअन्यादेशरूपोनोभवेत्तदाएकं
13 कएवचौरोवाच्यः नात्रसंदेहः अथचौरस्यस्वरूपमाह तदाप्रश्नरमलस्यसप्तमगृह[redacted] ८५

त्रा यस्मिन् गृहे यो रूपी पतितो वर्त्तते तस्य गृहस्य स्वामिना तं रूपिणं गुणयेत् एवं प्रश्नरमलस्य सर्वरूपिणां स
मस्तस्य गृहस्वामिना गुणितां पश्येत् सप्तमगृहस्वामी कस्मात् गृहात् समुत्पन्नो यातः तेनैव गृहेण फलं ब्रू
यात् तथाहि यदि चतुर्थगृहात् समुत्पन्नो भवेत्तदा चौरः स्वस्थाने तिष्ठति यदि तृतीयगृहान्नवमगृहा
त्समुत्पन्नो भवेत्तदा चौरः प्रवासी वर्त्तते वा कुत्रापि गन्तुमिच्छति एवं शेषगृहाणां फलं वाच्यम्। अथ य
दि पलायमानदासस्य प्रश्नं कारयेत्तदा सप्तमगृहस्वामिसप्तमगृहरूपिणोरिव षष्ठगृहस्वामिषष्ठ
गृहरूपिभ्यां फलं ब्रूयात्। प्रागुक्तवत्। यदि दासीस्त्रीवयोः प्रश्नं कारयेत्तदा ताभ्यामेव षष्ठगृहस्वा
मिषष्ठगृहरूपिभ्यां फलं वाच्यम्। यदि चात्मीष्टज्ञातिगृहदासस्य प्रश्नं कारयेत्तदा तयोरिव द्वादशगृ
हस्वामिद्वादशगृहरूपिभ्यां फलं ब्रूयात् प्रागुक्तवत् यदि चतुःपदो नष्टो भवेत्तदर्थं यदि कोऽपि पृ
च्छेत्तदा ताभ्यामेव द्वादशगृहस्वामिद्वादशगृहरूपिभ्यां फलं वाच्यम् अथ सर्वप्रश्नेषु यदि प्रश्न

114

त्रिर्जं भवत्फलं वाच्यम् तथा स्थिरश्चेत्तदा प्रवेशिवत्फलं ब्रूयात् अथ यदि चतुर्थदशमयोर्मध्ये
तथा चतुर्थसप्तमयोर्मध्ये यद्येकस्मिन् गृहे प्रवेशी वा स्थिरो भवेत्तद्यैकस्मिन् गृह निर्जमो वा द्विस्व
भावो भवेत्तदा तौ द्वौ तस्मिन् गुणितौ कर्त्तव्यौ तान्मासान् तन्नो यो रूपी स्यात्तेनैव रूपिणां फलं वाच्यम्
नात्र संदेहः अथ यदि कोपि पृच्छेत्तस्य चौरः कीदृशवस्त्रावेष्टितो वर्त्तत इति तत्राह तदा चैकादश ११
गृह रूपिणां चौरधारितपरस्य वर्णं ब्रूयात्तद्रूपिणां विचारांशैः यथा पूर्वोक्तं मया अथ यदि कोपि
पृच्छेत्तस्य चौरस्य स्थानं कीदृशं वर्त्तत इत्यत्र आह तदा दशम १० गृह रूपिणां चौरस्य स्थानरूपं
ब्रूयात् पिणां विचारांशैः नात्र संदेहः अथ यदि कोपि पृच्छेत्तेन चौरेण द्रव्यं व्ययं कृतं वा कुत्रापि
स्थापितं वर्त्तते इत्यत्र आह । तदा प्रथमस्य लग्नस्याष्टम गृहे पश्येत् । यदि प्रवेशी वा स्थिरो भवेत्तदा
तेन चौरेण द्रव्यं व्ययं नो कृतमिति ब्रूयात् शुभे स्थापितं नस्वेच्छया च अथ शुभेऽस्थापितं नाति

९६

रूपिरांपश्येत्। रूपिरांस्वरूपमार्गेरातद्रूपिस्सदृशंस्वरूपचौरस्यब्रूयात्रूपिरांस्वरूपंतुदृष्टौक्रम
या नात्रसंदेहः अथयदिकोपिपृच्छेत्सचौरोस्मिन्नेवनगरेवर्त्तते वानास्तीत्यतआह तदाचतुर्थ
गृहे ४ दशम १० गृहेचपश्येत् यद्युभयस्मिन्गृहेप्रवेशीभवेद्वास्थिरोस्यात्तदासचौरोऽस्मिन्नेवनगरे
वर्त्तते यद्युभयस्मिन्गृहे निर्गमोभवेद्वाद्विस्वभावोभवेत्तदासचौरोऽस्मिन्नगरेनास्तीतिवाच्य
म् अत्रकेचिद्वदन्ति यदिद्विस्वभावोभवेत्तदासचौरः कुत्रापिगन्तुमिच्छतिगतोवा। शुभेस्वाधिस्तेना
ऽनीस्वेच्छयाच अशुभेस्वाधिस्तेनाऽनीक्षयाच यदिउभयस्मिन्गृहेस्थिरोभवेत्तदासचौरः स्वस्था
नेस्थिररूपेणातिष्ठति। अथचौयदिसप्तवसप्तमगृहेनवमगृहेचान्यादेशरूपोभवेत्तदासचौरः
कुत्रापिबहिर्गतोवर्त्तते अत्रकेचिद्वदन्ति चतुर्थेसप्तमेवनिर्गमोभवेत्तदासचौरः कुत्रापिबहि
र्गतोवर्त्ततइतिवाच्यम् यदिचतुर्थेसप्तमेचप्रवेशीभवेत्तदासंप्रतिनगरएववर्त्तते। द्विस्वभावेच

ग्रहस्थस्वामीति तथा सप्तमग्रहरूपिणं सप्तमग्रहस्वामिना गुणयेत्। तास्मां गुणनतो यो रूपी भवेत्तं रम
लेषु पश्येत्कुत्र समागते वर्त्तते। यस्मिन् ग्रहे स्थाने तत्स्थं वं धिता दिशि चौरो वाच्यः। यदि सप्तकुत्रापि नो समा
गतः स्यात्तदा तमेव रूपिणं पश्येत्। यदि वह्निमुखो भवेत्तदा चौरः पूर्वस्यां दिशि वाच्यः। यदि वायुमुखो
भवेत्तदा चौरः पश्चिमायां दिशि वाच्यः। यदि जलमुखो भवेत्तदा चोत्तरस्यां दिशि चौरो वाच्यः। यदि
भूमिमुखो भवेत्तदा दक्षिणस्यां दिशि चौरो वाच्यः अथवा सरूपी यदि प्रथम १ द्वितीय २ तृतीय ३
ग्रहेषु समागतः स्यात्तदा पूर्वस्यां दिशि सचौरो वाच्यः परन्तु सबालरूपः पुरुषो वर्त्तते इति ब्रूयात्
यदि चतुर्थ ४ पंचम ५ षष्ठ ६ ग्रहेषु समागतः स्यात्तदा चौरो दक्षिणस्यां दिशि वाच्यः परन्तु स्त्रीरू
रूपी रूपा काचित्स्त्री वर्त्तते यदि सप्तमा ७ ष्टम ८ नवम ९ ग्रहेषु समागतः स्यात्तदा चौरः पश्चिम
या दिशि वाच्यः मनुष्य विरः पुरुषो वर्त्तते। यदि दशमे १० कादश ११ ~~[illegible]~~

क्षयाच । यदि द्विस्वभावो भवेत्तदा तस्मिन्मध्ये किंचित्व्ययकृतं तेन चौरेण । यदि निर्गुर्जमो भवेत्तदा तद्द्रव्य
सर्वव्ययं कृतं तेन चौरेण । शुभे स्थापितं तेन सुगमेन स्वेच्छया च । अशुभेऽस्थापितं तेन काठिण्येनाऽनिक्षा
याच नात्र संदेहः । अथ यदि कोऽपि पृच्छेत्स चौरः कस्यां दिशि वर्त्तत इत्युत तत्राह । तदा सप्तमगृहरूपिणं
पश्येत् एकस्मिन् गृहेऽन्वादेशरूपो वर्त्तत इत्यपि द्रष्टव्यम् । यदि प्रथम १ द्वितीये २ नवम ९ द्वादश १२
गृहेष्वन्वादेशरूपो भवेत्तदा स चौरः पूर्वस्यां दिशि वर्त्तते । यदि तृतीय ३ चतुर्थ ४ दशम १० पंचद
श १५ गृहेष्वन्वादेशो भवेत्तदा स चौरो दक्षिणस्यां दिशि वर्त्तत इति वाच्यम् । यदि सोऽन्वादेशः पंचम
५ षष्ठे ६ कादश ११ षोडश १६ गृहेषु स्यात्तदा स चौर उत्तरस्यां दिशि वर्त्तत इति ब्रूयात् । यदि सोऽन्वा
देशः सप्तम ७ ष्टम ८ त्रयोदश १३ चतुर्दश १४ गृहेषु स्यात्तदा स चौरः पश्चिमायां दिशि वर्त्तते
अथ यदि सप्तमगृहरूपी प्रश्नारम्भे लेपकृत्राप्यन्वादेशरूपो नो भवेत्तदा तमेव रूपिणं पश्येत्स कस्य

२. ला. स्थिरं वाच्यम्। चौरेणाचोरितं प्रष्टुर्विस्मरणं यातम्। अथ यदि शुभनिर्जमो भवेत्तदा प्रष्टा स्वत द्रव्यं कुत्रापि
स्थयं कृतवान् वा कुत्रापि पातितवान् अथवा कुत्रापि विस्मरणं कारितवान्न तु चौरेण हृतमिति ब्रूया
त् अथ यदि चाशुभनिर्जमो भवेत्तदा तद्द्रव्यं चौरेण चोरितं गृहीत्वा कुत्रापि गतश्चौर इति वाच्यम्।
अथ पदि स्थिरो भवेत्तदा प्रवेशितवस्तुफलं ब्रूयात् यदि द्विस्वभावो भवेत्तदा निर्जमवस्तुफलं वाच्यमि
ति नात्र संदेहः अथ केनापि पुरुषेणैकं वस्तु कुत्रापि स्थापितं स्थापितस्य यदि कति पयदिनोपरि तद्व
स्तु पश्येत्स्तु न तत्प्राप्नुयात्तदा स पुरुषो यदि ज्ञातुमिच्छेत्तद्वस्तु चौरेण हृतं वा कुत्रापि विस्मरणं पात
मितु तत्राह। तदा ऽष्टम गृहे द्वितीय गृहे च पश्येत्। यदि शुभनिर्जमो भवेत्तदा तद्द्रव्यं चौरेण नो हृतं
कं वं प्रष्टा स्वस्वयं स्थापितेन कुत्रापि तद्द्रव्यं स्थापितवान्नं प्रति प्रष्टविस्मरणं यातमिति ब्रूयात्।
16 तस्य द्रव्यस्य प्राप्तिः शीघ्रतया स्यात् अथ यद्यशुभनिर्जमो भवेत्तदा तद्द्रव्यं चौरेण हृतं परं तु गृहाद्बहि



९८

द्वादशगृहेषु १२ समागतः स्यात्तदा चौरउत्तरस्यां दिशि वाच्यः परंतु सा काचिद्वृद्धा स्त्री वर्त्तते नात्र संदे
हः अथ प्रकारान्तरमाह प्रश्नलग्नस्य सप्तमगृहे पश्येत् । यदि वह्निमुखो भवेत्तदा स चौरो दिशि पूर्व
स्यां परंतु स पुरुषो वर्त्तते । यदि वायुमुखो भवेत्तदा स चौरो गतः पश्चिमस्यां दिशि वाच्य अत्रापि नररूपः । य
दि जलमुखो भवेत्तदा स चौर उत्तरस्यां दिशि वाच्यः परंतु सा काचित्स्त्री रूपा वर्त्तते । यदि भूमिमुखो भवे
त्तदा स चौरो दक्षिणस्यां दिशि वाच्य अत्रापि सा काचित्स्त्री रूपा वर्त्तते इति ब्रूयात् नात्र संदेहः अ
थ प्रकारान्तरमाह० चतुर्थगृहे रूपिणां षष्ठगृहे रूपिणा गुणयेत् ताभ्यां मुक्तोऽङ्को यो रूपी भवेत्तेन रूपिणा
वह्निमुखादिसंज्ञा७न्वितेन चौरगतां दिशं ब्रूयात् अथ यदि कोऽपि पृच्छेत् द्रव्यं चौरेण चोरितं वा नास्ती
त्यत आह तदा द्वितीयगृहे पश्येत् यदि शुभग्रहप्रवेशी भवेत्तदा तद्द्रव्यं चौरेण चोरितं परंतु तत्रैव संको
गतोऽस्ति गृहीत्वा नो गतः प्रष्टाः ततं वदतीति ब्रूयात् अथ यदि चाशुभग्रहप्रवेशी भवेत्तदा तद्द्रव्यं तत्रैव क्षे

यदि द्वितीयगृहे प्रवेशी भवेत्तथाष्टमगृहे निर्गमो भवेत्तदा तद्वस्तु द्रव्यादिकं केनापि चौरितमि

तीयगृहे शुभप्रवेशी भवेत्तथाऽष्टमगृहे पि स्यात्तदा तद्वस्तु द्रव्यादिकं केनापि नो चौरितं वा किंचिद् गृहीतं किं
चिन्न्यूनमिति ब्रूयात् यद्यशुभप्रवेशी चेत्तदाऽवश्यं केनापि किंचिच्चौरितमपरं तत्रैव न्यूनमिति वाच्य
म् अथ यदि द्वितीयगृहे शुभनिर्गमो भवेत्तथाष्टमगृहे शुभप्रवेशी समागतः स्यात्तदा तद्वस्तु द्रव्या
दिकं केनापि चौरितमिति ब्रूयात् यद्यशुभयस्मिन् गृहे निर्गमः समागतः स्यात्तदा तद्वस्तु द्रव्यादिकं चौ
रेण चौरितं परन्तु चौरगृहादपि केनाप्यन्येन चौरितमिति ब्रूयात्। यदि तयोर्मध्ये १।८ स्थस्यात्तदा प्र
वेशिवत्फलं ब्रूयात्। यदि द्विस्वभावश्चेत्तदा निर्गमवत्फलं वाच्यम् अथ द्वितीयगृहप्रष्टुः कोश
स्थानेपैतथाऽष्टमगृहे चौरस्यां कोशस्थानमिति नात्र संदेहः अथ यदि कोपि पृच्छेच्चतुःपदो नष्टो
पास्तं केनापि पुरुषेण चौरितं वा नास्तीत्यतः आह तदा द्वादशगृहे पश्येत्। यदि शुभनिर्ग
मो भवेत्तदा तं चतुःपदं चौरो गृहीत्वा नो गतः कुत्रापि।

17

तदा तद्धस्तचौरेणानीहृतं तत्रैव वर्तते नितस्य शास्त्रः शीघ्रतयास्या अथ यदि शुभ ... भावे
भवेत्तदा ॥
र्गतो वाच्यः तस्माद्गृहाद्दक्षिणस्यां दिशि प्रकाशस्थाने पश्येयतः प्राप्नुयात् अथ यदि चाशुभस्थिरो भ
वेत्तदा तद्धस्तचौरो गृहात्वागतः। यदि शुभस्थिरो भवेत्तदा तद्धस्तचौरेण नो चौरितं प्रच्छुरेव विस्मरणाया
तमिति ब्रूयात्। अथ यदि शुभाशुभप्रवेशी भवेत्तदा तस्मिन् मध्ये किंचिच्चौरेणाहृतमपरं सर्वं वर्त्तते तत्रै
वेति ब्रूयात् नात्र संदेहः अथ यदि कोपि पृच्छेत्तद्द्रव्यं चौरो गृहात्वागतो वा तत्रैव तत्कालागतस्तत्र आह
तदा प्रश्नाक्षरमध्येषु पश्येत् सातरूपीः कुत्र समागतो वर्त्तते। तस्मात् द्वितीये ये यो रूपी पतितः स्यात्तेनैव रू
पिणा चौरस्य स्वरूपं ब्रूयात्। यदि अरोः भवेत्तदापि तद्धृतं एवकेतु रूपिणापि चौरस्वरूपं ब्रूयात्। य
दीमे त्रयो रूपिणाः प्रश्नाक्षरमध्येषु समागताः स्युस्तदा चौरो द्रव्यं गृहीत्वा हृत्वा च गतो वाच्यः यदीमे रूपि
णाः प्रश्नाक्षरमध्येषु नो समागताः स्युस्तदा द्रव्यं चौरेण नो चौरितमिति ब्रूयात् नात्र संदेहः अथ यदि
कोपि पृच्छेत्तद्धस्तद्रव्यं केनापि चौरितं वा स्तीत्यत्र आह तदा द्वितीयगृहे ऽष्टमगृहे च पश्येत्। यदि द्वि

शंतेनात्रसंदेहः अथयदि कोपि पृच्छेत् तं चौरस्तं चतुःपदं गृहीत्वा कस्यां दिशि गत इत्यत्र आह तंद्वादशगृहे १२।१
स्थेत् यदि वह्निभुक्तो भवेत्तदा पूर्वस्यां दिशि गतो वाच्यः यदितः स्यात्वादेशः प्रथम १ द्वितीय २ तृतीय ३ त्रयोदश
१३ गृहेषु स्यात्तदा संग्रायं सत्यरूपं तत्फलमिति एवं वायुभुक्तादिकानामपि वायुभुक्तस्थेत्तदा पश्चिमदिशि।
जलभुक्ते चोत्तरस्यां दिशि। भूमिभुक्तेन दक्षिणस्यां दिशि नात्रसंदेहः अथयदि कोपि पृच्छेत् चौरहृतद्रव्य
स्य प्राप्तिः स्याद्वा नेत्यत्र आह। तदाप्रश्नलग्ने षु१स्थेत् यदि सप्तमाष्टमगृहयो रूपि सौभाग्यगृहेष
न्वादेशरूपौ स्यातां तदा द्रव्यचौरो ह्यवपिलहस्ते षागमेत्। यदि सप्तमगृहरूपी एकाकी एवा न्वादेशरूपो
भवेत्तदा चौरप्रापयेत्ता पद्यष्टमगृहरूपी एव स्यात्तदाद्रव्यं प्रापयेन्न तु चौरम् अथप्रकारान्तरमाह एतत्प्र
कारं बहुपरिच्छिन्नं भवेत् सत्यरूपं वर्त्तते तदाह यदि द्वितीयगृहे चतुर्दशगृहे च प्रवेशी भवेत्तदाक्र
वं चौरहृतद्रव्यस्य प्राप्तिः स्यात् यद्युभयस्मिन् गृहे निर्जमो भवेत्तदा तस्य द्रव्यस्य नो प्राप्तिः स्यात्।

18

यदि चेद्गृहीत्वागतः स्यात्तदा सुगममार्गेण तस्य चतुःपदस्य प्राप्तिः स्यात् यदि चाशुभप्रवेशो भवेत्तदा चौ
रेणैव गृहीत्वागतः। तस्य गृहस्य पश्चिमदिशि विलोकयेत् स चतुःपदः स्वेक्षयाकुत्रापि गतो वर्त्तते इति त्येव प्राप्नु
यात् अत्र केचिद्दूरत्तितं लिंगं पश्येत् कस्यापि दिशः स्वामी सः। वह्निमुखादिसंज्ञाभिस्तां दिशं ब्रूयात् तद्दिशि
विलोकिते सति ऋवं चतुःपदं प्राप्नुयात् अथ यदि द्वादशगृहे शुभस्थितो भवेत्तथा तस्य समीपे च यो द्वादशगृ
हे शुभनिर्गमः समागतः स्यात्तदा तं चतुःपदं चौरेणैव गृहीत्वागतः स तु स्वेक्षयाकुत्रापि गतः यदि तं विलो
कयेत्तदा प्राप्नुयात् अथ यदि विधुरूपी भवेत्तदा तं चतुःपदं नो वध्या को ऽपि गृहीतवान् स चतुःपदः स्वेच्छ
याकुत्रापि गतः। अथ यदि शुभदृष्टिस्वभावो भवेत्तदा स चतुःपदो दृढबंधनेन नो बद्धः स्थितः। बंधनान्मुक्तो
स्वेच्छयाकुत्रापि गतः। तस्य प्राप्तिः शीघ्रतया स्यात् अथ यद्यशुभदृष्टिस्वभावो भवेत्तदा तं चतुःपदं चौरो गृ
हीतवान् तस्य प्राप्तिर्म्महता कष्टेन कारतेन च स्यात्तत्रापि हस्ताद्गमेत् एवं सर्वत्रैवाऽशुभेन व्यत्ययफलं ब्रू

स्य द्रव्यस्य प्राप्तिः स्यात् । यदि निर्गमो भवेत्तदा नो प्राप्तिः स्यात् । स्थिरे स्थिरत्वं प्राप्तौ द्विस्वभावे द्रव्यप्राप्तौ द्वि
विधत्वं वाच्यम् । शुभे स्वगमनागमने न । अशुभे काठिन्येन नात्र संदेहः अथ यदि कोपि पृच्छेच्चौरहृतवस्तु नि
किं किंस्थितमिति तस्य प्रत्युत्तरं मूकप्रश्नविधानेन वदेत् । तस्य मूकप्रश्नस्य विधानं मिश्रिकप्रकरणे तावत्क
थयिष्यामि ईश्वराज्ञया । अथ चौरहृतद्रव्यप्राप्तौ प्रकारान्तरमाह । तदा अष्टमगृहरूपिणां पश्येत् । यदि स प्रथम
गृहे वा द्वितीयगृहे इत्थादिशारूपो भवेत्तदा तस्य द्रव्यस्य प्राप्तिः स्यात् अथ यदि चैकादश ११ पंचदश १५ षोडश १६
गृहे षष्ठमो भवेत् यथा त्रयाणां मध्ये चैकोपि यदि द्वितीयगृहे इत्थादेशारूपं कारयेत्तदा तस्य द्रव्यस्य प्राप्तिः स्या
त् यदि तेषु गृहेषु ११।१५।१६ निर्जमो भवेत्तदा तस्य द्रव्यस्य प्राप्तिर्नो स्यात् नात्र संदेहः अथ यदि कोपि पृ
च्छेत् नस्तौर्यत्वं प्रगटं भवेद्वा न वेति तत्राह द्वितीयगृहरूपिणा अष्टमगृहरूपिणा गुणयेत् तस्मादुत्पन्नं पश्ये
त् । यदि शुभप्रवेशी भवेत्तदा चौर्यत्वं प्रगटं भवेदिति ब्रूयात् यदि शुभनिर्गमो भवेत्तदा कदापि चौर्यत्वं प्रगटं नो भ

यद्युभयस्मिन् गृहे स्थिरो भवेत्तदा तस्य द्रव्यस्य स्थिरतया प्राप्तिः स्यात्। यद्युभयस्मिन् गृहे द्विस्वभावो भवे
त्तदा तस्मिन् द्रव्यमध्ये किंचित्प्राप्नुयात् शुभेस्तु गममार्गेण विना परिश्रमेण च अशुभे काठिन्येन परि
श्रमेण च यदि तयोर्गृहयोर्मध्ये चैकस्मिन् गृहेऽन्यस्तथैकस्मिन् गृहेऽन्यरूपी पतितः स्यात्तदा वालोऽधिका
न्मूलं ब्रूयात् अथ यदि पंचदशगृहरूपी प्राप्त्युपरि साक्षीभूतं तं दापयेत्तदा तूर्णं न तस्य द्रव्यस्य प्रा
प्तिः स्यात्। यदि साक्षीभूतं तं नो दापयेत्तदा स्थिरतया तस्य द्रव्यस्य प्राप्तिः स्यात् नात्र संदेहः अथ प्रक
रान्तरमाह द्वितीयगृहरूपिणं पंचदशगृहरूपिणा गुणयेत् ताभ्यामुत्पन्नं भिन्नं स्थापयेत्। पुनः षष्ठ
गृहस्थं चतुर्दशगृहस्थेन गुणयेत् आभ्यामुत्पन्नरूपिणा भिन्नस्थं गुणित्वाऽन्यरूपिणामुत्पन्नं कारये
त् तं पश्येत्। यदि तस्य रूपिणो विचारांशः प्राप्त्युपरि भवेत्तदा तस्य द्रव्यस्य प्राप्तिः स्यात्। यदि तस्य विचा
रांशः प्राप्त्युपरि नो भवेत्तदा कदापि नो प्राप्तिः स्यात् अथ एतं रूपिणं पश्येत्। यदि स प्रवेशी भवेत्तदा त

गृहेषु पश्येत् यदि तेषु गृहेषु चाशुभनिर्जमे सवाऽशुभस्थिरो भवेत्तदा स प्रवासी मृतः स्यादिति वाच्यम् अथवा स
प्तमगृहे चतुर्थगृहे चाशुभप्रवेशी भवेत्तथाष्टमगृहे नवमगृहे चाशुभनिर्जमः समागतः स्यात्तदा स प्रवासी मृतः
स्यादिति वाच्यम् अथवा यदि सप्तमगृहे रूपी द्वादशगृहे रूपी च वा द्वयोः स्थामाद्वितीय २ तृतीयगृहेऽन्यादेश
रूपी कारयेत्तदा स प्रवासी मृतः स्यादिति वाच्यम्। एतत्सर्वं ध्रुवं तदा यदि चतुर्थगृहेऽशुभप्रवेशी तथा दशम
गृहेऽशुभनिर्जमो भवेत्तदा तु तं प्रवासिनं शवरूपं दग्धकृतं स्यादिति वाच्यम् अथवा सप्तमे ७ मुसल्लसगृहे
ऽशुभनिर्जमो भवेत्तस्यान्यादेशो यदि द्वितीये २ त्रयोदशगृहे १३ स्योदिति ब्रूयात् अथवा प्रथमगृहे तदा प्रवा
नवमगृहे चाशुभनिर्जमो भवेत्तथा स एव चतुर्थे ४ ष्टम ८ गृहेऽन्यादेशरूपं कारयेत्तदा स प्रवासी मृ सी मृत
२० त इति ब्रूयात् अथ ग्रंथान्तरमाह प्रश्नारम्भलग्ने सर्वे रूपिणां रेखकके वलम्सुतान् विंहून्गणायेत्तायदि वा स्यादिति ब्रू°
वा द्यौ विंदव आधिक्याः स्युस्तदा स प्रवासी संप्रति जीवतीति ब्रूयात् यदि जलमूल्यो विंदव आधिक्याः स

स्तानां बलेन प्रगटत्वं ब्रूयात् नान्यथा अथ प्रकारान्तरमाह यदि द्वितीयगृहे चतुर्दशगृहे च प्रवेशी
भवेत्तदा तस्य द्रव्यस्य प्राप्तिः स्यात्। यदि चतुर्दशे पंचदशे च निर्गमो भवेत्तदा तस्य द्रव्यस्य नो प्राप्तिः स्या
त् नात्र संदेहः अथ प्रकारान्तरमाह अ८मगृहरूपिणां द्वितीयगृहस्थेन शुरायेत् ताम्मात्तु सप्तो यो भ
वेद्यदि सप्तस्मरमलेषु कुत्रापि समागतः स्यात्तदा तस्य चौरः हृतद्रव्यस्य प्राप्तिर्वाच्या। यदि कुत्रापि नो स
मागतो भवेत्तदा कदापि तस्य द्रव्यस्य नो प्राप्तिः स्यात् यदि सप्तमप्रवेशी वा सप्तमस्थो भवेत्तदा तद्र
व्यं सर्वं प्राप्नुयात् शुभे शुभगममार्जेणाविनापरिश्रमेण च। अशुभे काठिन्येन परिश्रमेण च। यदि
स निर्गमो वा द्विस्वभावो भवेत्तदा तस्मिन् द्रव्येऽर्द्धं प्राप्नुयात् अथ वा किंचिदिति। अथ यदि सप्तम
गृहरूपी मासान्तगृहे षन्वादेशरूपं कारयेत्तदा चौरः प्रगटो भवेत् नात्र संदेहः अथ प्रवासिनः प्रश्नं क
थयामि यदि कोऽपि पृच्छेत् तत्र प्रवासी मृतो वा जीवतीति तत्राह तदा प्रथम १ चतुर्थ ४ ७म ८ नवम ९

प्रवासिनो द्रव्यसकुशलत्वं तथोपद्रवत्वं चाष्टमगृहरूपिणा आन्वादेशरूपेण ब्रूयात् प्राशुक्तवत् अथ यदि
कोपि पृच्छेत् प्रवासी मृतो वा जीवन्नीति तत्र आह तदा सप्तमगृहरूपिणं दशमगृहरूपिणा गुणयेत् लब्धांगु
ल्यो यो भवेत्तं पश्येत् । यदि सप्रश्नाक्षरमलेपुकुत्रापि समागतः स्यादेवं यदि नोचेद्द्वादशघ्नो भवेत्तदा सप्रवासी
संप्रति जीवतीति ब्रूयात् । यदि सप्तवषष्ठगृहे ऽन्वादेशरूपं कारयेत्तदा सप्रवासी रोगग्रस्तो वर्त्तते पंचमगृ
हेन्वादेशरूपो भवेत्तदा तस्य जीवनमेव बहुकालम् अथ यदि रूपीः सप्तव प्रश्नाक्षरमलेपुकुत्रापि नो समागतः
स्यादथवाऽष्टमो भवेत्तदा सप्रवासी मृत इति ब्रूयात् नात्र संदेहः अथ यदि पृच्छेत् प्रवासी कदाऽऽ
गमिष्यतीति तत्र आह प्रवासिन आगमनस्य दिनसंख्या पूर्वोक्तेन चक्रेण सप्तमगृहरूपिसमुद्भवा
वाच्या अथ केचिद्वदन्ति प्रवासिनो जीवनमरणाकांक्षिणानुलक्ष्य मरणरूपिणा अन्वादेशरूपेण जीवन
गृहेषु ब्रूयात् जीवनगृहेषु अन्वादेशेन प्रवासिनो जीवनं तथा मरणगृहेषु अन्वादेशेन प्रवासिनो मरणं ब्रूयात्

21

स्तदासप्रवासीमृतःस्यादितिवाच्यम् नात्रसंदेहः अथप्रकारान्तरमाह यदिप्रथ१चतुर्थो४ष्टम८नव
म९गृहेषुशुभनिर्ज्जमोभवेत्तदासप्रवासीमृतइतिवाच्यम् यदितेषुशुभप्रवेशोभवेत्तदासप्रवासीसंप्रति
जीवतिब्रूयात् अथग्रंथान्तरमाह यदिप्रथगृहरूपीनवमगृहरूपिणोर्म्मध्येचैकोपिचतुर्थगृहेऽन्यादे
शरूपंकारयेत्तदासप्रवासीसंप्रतिजीवतीतिवाच्यम्। यद्यष्टम ८ गृहेऽन्यादेशरूपंकारयेत्तदासप्र
वासीमृतःस्यादितिवाच्यम् अथवाऽष्टमगृहे ८ शुभनिर्ज्जमः समागतःस्यात्तदासप्रवासीमृतइ
तिब्रूयात् नात्रसंदेहः अथयदिकोपिपृच्छेत्तत्सप्रवासिनअवस्थाकीदृशीवर्त्ततइत्यतआह तदा
सप्तमगृहरूपिणंपश्येत् यदिशुभोभवेत्तदाशुभावस्थावाच्या अशुभश्चेत्तदानिषिद्धावस्थावक्त
व्या अथतस्यशरीरेक्लेशसंभवंसुखसंभवंचसप्तमगृहरूपिणाऽन्यादेशरूपेणब्रूयात् अशुभगृ
हेष्वन्यादेशेनप्रवासिनः शरीरेक्लेशोवाच्यम्। शुभगृहेष्वन्यादेशेनशरीरेषुसुखंब्रूयात् अथवा

मिनागुणायेत्। तान्मानुसन्नोयः स्यात्तं पश्येत्। यदि स केन्द्रगृहेषु १।४।७।१० समागतो भवेत्तदा सप्रवासी तत्रस्थि
रूपो वर्त्तते प्रचलितुं नो वांछति। एवं यदि चतुर्थगृहे भवेत्तथा लवमगृहो निर्ज्जमः सप्तमगृहे च प्रवेशी भवेत्तद्
नुस्थिररूपप्रवसः कदापि नागमिष्यति अथ यदि तान्मानुसन्नरूपीः पणफरगृहेषु २।५।८।११ समागतः स्यात्त
दा सप्रवासी संप्रति चलितो नास्ति परन्तु प्रचलिष्यति अथ यदि स आपोक्लिमगृहेषु ३।६।९।१२ पतितः स्यात्तदा
सप्रवासी मार्ग्गे वर्त्तते। एवं यदि सप्तमगृहे निर्ज्जमस्तथा लवमगृहे प्रवेशी भवेत्तदा त्वरितायनया ऽऽगमेत्
नात्र संदेहः अथ प्रकारान्तरमाह यदि कोपि पृच्छेत् सप्रवासी तदाऽऽगमिष्यति ८ तत्राह तदा सप्तमगृ
हरूपिणं पश्येत् यदि समातगृहेष्वन्यादेशरूपं कारयेत्तदा वर्षमध्ये ह्यागमिष्यतीति ब्रूयात् यदि दुहि
तृगृहे षन्वादेशरूपं कारयेत्तदा मासमध्ये। यदि द्वौ हि त्रीगृहे षन्वादे वरूपो भवेत्तदा सप्तमदिनमध्ये। यदि
साक्षीगृहे षन्वादेशरूपो भवेत्तदा दिनद्वित्रिमध्ये नात्र संदेहः अथ यदि कोपि पृच्छेत् सप्रवासी शीघ्रं त

१।२।३।४ मातृगृहाणि ९।१०।११।१२

५।६।७।८ दुहितृगृहाणि साक्षीभूतानि

स्तदासप्रवासीमृतःस्यादितिवाच्यम् नात्रसंदेहः अथप्रकारान्तरमाह यदिप्रथ१चतुर्थ४ष्टम८नव
म९ गृहेषुशुभनिर्गमोभवेत्तदासप्रवासीमृतइतिवाच्यम् यदितेषुशुभप्रवेशोभवेत्तदासप्रवासीसंप्रति
जीवतिब्रूयात् अथग्रंथांतरमाह यदिप्रथमगृहरूपीनवमगृहरूपिणोर्मध्येचैकोपिचतुर्थंगृहेऽन्यादे
शरूपंकारयेत्तदासप्रवासीसंप्रतिजीवतीतिवाच्यम्। यद्यष्टम८गृहेऽन्यादेशरूपंकारयेत्तदासप्र
वासीमृतःस्यादितिवाच्यम् अथवाऽष्टमगृहेऽशुभनिर्गमः समागतःस्यात्तदासप्रवासीमृतइ
तिब्रूयात् नात्रसंदेहः अथयदिकोपिपृच्छेत्तत्सप्रवासिनअवस्थाकीदृशीवर्त्ततइत्यतआह तदा
सप्तमगृहरूपिणांपश्येत् यदिशुभोभवेत्तदाशुभावस्थावाच्या अथशुभश्चेत्तदानिषिद्धावस्थावक्त
व्या अथतस्यशरीरेक्लेशसंभवंसुखसंभवंचसप्तमगृहरूपिणाऽन्यादेशरूपेणब्रूयात् अथशुभगृ
हेषुन्यादेशेनप्रवासिनः शरीरेक्लेशोवाच्यम्। शुभगृहेषुन्यादेशेनशरीरेषुसुखंब्रूयात् अथवा

भिनागुणयेत्। लग्नात्तृतीयः स्यात्तं पश्येत्। यदि सकेन्द्रगृहेषु १।४।७।१० समागतो भवेत्तदा सप्रवासी तत्रैव स्थि
रूपो वर्त्तते प्रचलितुं नो वांछति। एवं यदि चतुर्थगृहे भवेत्तथा नवमगृहे निर्गमः सप्तमगृहे च प्रवेशी भवेत्तद्व
स्तुस्थिररूपः प्रवासः कदापि नागमिष्यति अथ यदि लग्नात्तृतीयरूपीः पणफरगृहेषु २।५।८।११ समागतः स्यात्त
दा सप्रवासी संप्रतिचलितो नास्ति परन्तु प्रचलिष्यति अथ यदि आपोक्लिमगृहेषु ३।६।९।१२ पतितः स्यात्तदा
सप्रवासी मार्गे वर्त्तते। एवं यदि सप्तमगृहे निर्गमस्तथा नवमगृहे प्रवेशी भवेत्तदा तु शीघ्रतयाऽऽगमेत्
नात्र संदेहः अथ प्रकारान्तरमाह यदि कोऽपि पृच्छेत्सप्रवासी तदाऽऽगमिष्यति ८ तत्र आह तदा सप्तमगृ
हरूपिणं पश्येत् यदि सप्तमातृगृहे षण्वादेशरूपं कारयेत्तदा वर्षमध्ये आगमिष्यतीति ब्रूयात् यदि दुहि
तृगृहे षण्वादेशरूपं कारयेत्तदा मासमध्ये। यदि दौहित्रीगृहे षण्वादे चरूपो भवेत्तदा सप्तमदिनमध्ये। यदि
साक्षीगृहे षण्वादेशरूपो भवेत्तदा दिनद्वित्रिमध्ये नात्र संदेहः अथ यदि कोऽपि पृच्छेत्सप्रवासी शीघ्रेत

१।२।३।४ मातृगृहाणि [illegible]
५।६।७।८ दुहितृगृहाणि साक्षीभूतानि

र तदाह जीवनमरणाख्ये हानि। वन्द्रिमुखे गृह्णाति मरणस्य ज्ञातव्यमिति नात्रसंदेहः अथयदिकोपि
पृष्ठे प्रवासिनोऽवस्था कीदृशी वर्त्तते इत्यत आह तदा प्रथम १ तृतीया ३ भामेकं रूपिणां वै निष्काशयेत्
कादश तथा नवमैर्गृहरूपिभामेकं निष्काशयेत्। द्वाभ्यामेकं रूपिणां छत्वा पश्येत्। यदि सप्रवेशी वा स्थिरो भवे
त्तदा प्रवासी स्थिरत्वेन स्वस्थले एव तिष्ठति परन्तु यदि स एव केन्द्रगृहे षष्ठ्वादेशरूपो भवेत्तदा तु अवमेव प्र
वासी प्रचलनोपरि सेच्छानो कारयेदिति। अथ यदि द्विस्वभावो भवेत्तदा सप्रवासी द्विविधविचित्तो वर्त्तते
स्वगृहे प्रत्यागमे तु नस्मो गर्जो निवृत्तो भवेत्। परन्तु यदि स एव पनफरगृहे षष्ठ्वादेशरूपं कारयेत्तदा अव
मेव मार्गो निवृत्तिः स्यात्। अथ यदि निर्गमो भवेत्तदा सप्रवासी प्रचलितः स्यादिति वाच्यम् अवं यदि
तृतीय नवमगृहेऽन्वादेशरूपो भवेत्। अथ यदि सप्तमगृहे निर्गमो भवेत्तथा तृतीये ३ नवमे ९ च
प्रवेशी स्यात्तदा प्रवासी मार्गे वर्त्तते अथ [illegible] रूपिणं पश्येत्। तं च सप्तमगृहस्य

र॰ल॰ पश्येत्। यदि दशम प्रवेशी भवेत्तदा स प्रवासी कुशलत्वेनवागमेत्। यदि सप्तम गृहे प्रवेशी भवेत्तदापि स प्रवासी तस्मा
त्स्थानात्प्रचलितो नास्तीति॥ यदि प्रथम १ नवम ९ गृहे वा नवम ९ द्वादश १२ गृहे निर्ज्जमो भवेत्तदाक्षेवं स प्र॰
वासी दूरान्तरे वर्त्तते। यदि पंचम ५ गृहे निर्ज्जमोः भवेत्तदा स प्रवासी संप्रति प्रचलितुमिच्छति। अथ यदि पंच
दश १५ षोडश १६ गृहे प्रवेशी भवेत्तदा प्रवासी तस्मिन्दिने वा सप्तदिनमध्ये ह्यागमेत् यदि रमलेषु इमे रूपि
णः ⚏ ⚍ ⚎ स्युस्तदा प्रवासी वा तस्य पत्रं समागमत् अथ प्रकारान्तरमाह यदि मत्स्यु भवने ८ निर्ज्जमो भवे
त्तदा स प्रवासी तस्मान्नगराद्बहिः समागतो वाच्यः। स्वगृहं प्रतिप्रचलितः यदि वा स्मीं ३ त्रयोदश गृहे प्रा
प्तितः स्यात्तदा प्रवासी प्रचलितो वा निवर्त्तो पातः नात्र संदेहः अथ यदि कोपि पृच्छेत्तस्य प्रवासिनः की
दृशी अवस्था वर्त्तते तत्र तत्राह प्रस्तारमलस्य सर्वविन्दुसमूहं कारयेत् अष्टभि ८ र्भजेत् शेषाकान्
प्रथमगृहादिषु दापयेत्। पत्रसंख्यां पूर्णितां पाणान्त रूपितां पश्येत्। यदि सप्तमो भवेत्तदा प्रवासिनस्त्व

याऽऽगमिष्यति वा स्थिरतयेत्यत्र तत्स्वाह तदा समग्रगृहरूपितां पश्येत् यद्यशुभनिर्ज्जमो भवेद्यथा निर्ज्जमो भवे-
द्यथा इमे [illegible] तदा स प्रवासी तत्स्थानाद्द्वितीयस्थाने गत इति ब्रूयात् यदि शुभनिर्ज्जमो भवेद्यथा इमे [illegible]
तदा प्रवासी रूढितस्त्वेवागमेत् । प्र १ द्वितीय २ तृतीय ३ नवम ९ गृहे निर्ज्जमो भवेद्यदि तथा चतुर्द्दश १४ गृ-
हे प्रवेशी स्यात्तदा तु श्रवमेवागमेत् रूढितः । अत्र येऽत्र यफलवाच्यम् नात्र संदेहः अथ प्रकारान्तरमाह
द्वादशगृहरूपितां पश्येत् । यदि शुभनिर्ज्जमो भवेत्तदा प्रवासी रूढितस्त्वेवागमेत् अशुभेप्येवम् यदि प्रवेशी
भवेत्तदा किंचित्स्थिरतयाऽऽगमेत् । यदि स्थिरो भवेत्तदा स प्रवासी स्वयं नागमे यदि स्वद्विस्वभावा भवेत्तदा
स प्रवासी प्रचलितुमिच्छति प्रचलिष्यति अथ यदि कोऽपि पृच्छेत्स प्रवासी तस्मिन्नेव नगरे वर्त्तते वा नास्तीत्यत
स्वाह यदि मानरिमध्ये ७।४।३।४ इमे रूपिताः स्युः [illegible] तदा स प्रवासी तस्मिन्नेव वर्त्तते । यदि नो स्युस्तदा
नास्ति अथ यदि कोऽपि पृच्छेत्स प्रवासी प्रचलितो न वेत्यत्र तत्स्वाह तदा प्रथम १ नवम ९ दशम १० गृहेषु



पंच

शूः ÷ तदाप्रवासी गृहे त्वेवागमेत् अथवा तस्य पत्रिकासमागमेन् नात्र संदेहः अथ यदि कोपि पृच्छेत्प्रवा
सी कस्यां दिशि वर्त्तते इति तत्राह तदा समग्रहरूपिणां पश्येत् वह्नि सुखादिसंज्ञाभिर्दिशं ब्रूयात् एवं पला
यमानदासीदासप्रश्नेन तथा पलायमानचतुःपदानां प्रश्ने दिशं ब्रूयात् । पारत्वत्र षष्टग्रहरूपिणा दिशं वाच्यमि
ति शेषः । तेषां मागमनागमनं प्रोषितवद्ब्रूयात् नात्र संदेहः अथ यदि कोपि पृच्छेत्प्रवासी कदाऽऽग
मिष्यतीत्यत्र तत्राह तदा समग्रहरूपिणा उक्तावासंख्या वाच्या तत्समागमने अथवा पंचदश १५ षो
डश १६ त्रयोदश १३ गृहाणां रूपिणां पश्येत् यद्येतेषां वह्निस्थाने समविन्दवः स्युः कोष्ठे रेखारूपः
स्यात्तदा तस्मिन् दिने वाह्नि त्रिदिनमध्ये प्रवासिन आगमनं ब्रूयात् । यदि भूमिस्थाने तेषां विषमविन्
दवः स्युः कोष्ठे केवलविन्दुरेव स्यात्तदा प्रश्नादिनात्सप्तदिनमध्ये प्रवासिन आगमनं वाच्यम् अथ य
दि वह्निस्थाने विषमविन्दवस्तथा भूमिस्थाने समविन्दवः स्युस्तदा मासमध्ये प्रवासिन आगमनं ब्रू

२५

स्यात्समीचीना वाच्या यद्यशुभो भवेत्तदा प्रवासिनश्चवस्था निषिद्धतरा वाच्या अथ यदि कोपि प्रवासिनश्चा
गमनार्थं पृच्छेदित्यत आह तदुद्देशं समाश्रित्य रमलं पातयेत्। यदि प्रथम १ नवमै ९ कादश ११ गृहेषु शु
भप्रवेशी भवेत्तदा प्रवासी रुद्धितो वा गमेत्। यद्यशुभप्रवेशी भवेत्तदाः ह्यापि स प्रवासी नो प्रचलितव्य इति ब्रू
यात्। अथ यदि सप्तम गृहे ७ शुभनिर्गमो भवेत्तदा स प्रवासी ततश्चान्यत्र कुत्रापि गन्तुमिच्छति तदर्थं प्र न
चलितो मार्गे वर्त्तत इति वाच्यम् यदि सप्तम ७ गृहे शुभनिर्जमो भवेत्तदा स प्रवासी तत्र स्वस्थानान्नु
न° त्रापि वक्रहूर्त्तं गन्तुमिच्छति गमिष्यति संप्रत्युद्धिग्रचित्तः परिखेदितोस्ति अथ यदि प्रथमगृहे १ निर्जमो
भवेत्पुनः सप्तव यदि नवम ९ गृहे वा त्रयोदशगृहे न्वादेशरूपं कार्यं दृष्ट्वा वा त्रिषु गृहेषु १।९।१३
निर्जमः समागतः स्यात्तथा पंचदश १५ षोडशगृहे १६ प्रवेशी भवेत्तदा प्रवासी तस्मिन्नेव दिने समा
गमेत् नात्र संदेहः अथ यदि मेलूपिताः शुभगृहे पुनः समागताः स्युः। बोधनं आरं शुद्धिः तीक्ष्णां

कारणान्तरमाह अष्टमगृहरूपिराशिं चतुर्दशगृहरूपिराशिगुणयेत्। ताभ्यामुत्पन्नं पश्येत् यदि सप्रवेसी भवेत्तदा प्रवास
रमलेषु कुत्रापि समागतः स्यात्तदा प्रवासी लक्ष्मीवान् वर्त्तते एतत्प्रकारं बहुपरीक्षितं ज्ञेयम् नात्र संदेहः
अथ यदि कोपि पृच्छेत्स प्रवासी दुःखान्वितो वर्त्तते वा नास्मीत्यत आह यदि द्वादशगृहरूपी षष्ठे द्र गृहेऽ
न्वादेशरूपो भवेत्तदा स प्रवासी क्लेशान्वितो वर्त्तत इति ब्रूयात् तथाष्टमगृहे पद्यन्वादेशरूपं कारयेत्त
दापि प्रवासी क्लेशान्वितो वाच्यः। कदापि तस्मात्क्लेशान्न मुच्येत् अपि तु मृत्युं प्राप्नुयात् अथ यदि चतुर्दश
१४ गृहे मंदगो = भवेत्तदा स प्रवासी वद्धगृहे दृढबंधनैस्तत्र वद्धोऽस्ति नात्र संदेहः अथ यदि कोपि
पृच्छेत्स प्रवासी सस्त्रीको वर्त्तते वा एकाकी इत्यत आह तदा त्रयोदशगृहरूपिराशिं पश्येत्। यदि शुभो भ
वेत्स एव यदि सप्तमगृहेऽन्वादेरूपं कारयेत्तदा स प्रवासी तत्र सस्त्रीको वर्त्तत इति ब्रूयात्। यद्येवं न स्या
त्तदा स एकाकी वाच्यः अथ यदि पृच्छेत्स प्रवासी वा सिनः कीदृशी अवस्था वर्त्तत इत्यत आह तदा

25

अथ यदि तेषामाद्यंतावपि विषमविंदु युतौ स्यातां तदा तस्मिन्मुहूर्ते नस्मिन्नू
यात् अथ ग्रंथांतरमाह यदि कोपि पृच्छेत्प्रवासी कदा स्वेवागमिष्यति वा नास्तीत्यत आह यदि ३ शरु ३
रूपीः प्रस्तर मलेषु वद्धरूपं कारयेत्तदा प्रवासी स्थानांतरं २ प्रति व्रजेत्स कस्मिन्नपि स्थाने स्थिरतेन नो तिष्ठे
त् यदिशीता ः शर मलेषु वद्धरूपं कारयेत्तदा तदेव फलं ब्रूयात् अथ यदि चतुर्थे चतुर्दशगृहे चशुभोभ
वेत्संवत्स पंचदश १५ गृहरूपिणस्सहतदा प्रवासी कदा स्वेवागमेत्। यदि चतुर्दश गृहरूपी मात्तृगृहे षत्वा
देशरूपं कारयेत्तदा प्रवासी कदा स्वेवागमेत् नात्र संदेहः अथ यदि कोपि पृच्छेत्प्रवासी लक्ष्मीवान्वर्त्त
ते वा नास्तीत्यत आह तदा सप्तम गृहरूपिणं पश्येत् यदि प्रवेशी वा स्थिरो भवेत्तदा सप्रवासी लक्ष्मीवा
न्वर्त्तते। यदि निर्जमो वा हिस्तभावो भवेत्तदा सप्रवासी दरिद्रो वाच्यः अथ वा दशम १० गृहे यदि ती
क्ष्णांशु ः रूपी भवेत्तथा हिती यगृहे २ नस्तरिरूपी ः भवेत्तदा सप्रवासी लक्ष्मीवान्वर्त्तते तथा प्र
त्ररूपोऽस्ति। अथ यद्येतौ विहाय शेषरूपिणः समागताः स्युस्तदा प्रवासी दरिद्र एव वाच्यः अथ प्र

सिद्धं स्वस्थं सम्यग्वर्त्तते वा नेति प्रश्ने तत्राह तदा प्रथमगृहप्रभृतिपंचदशगृहपर्यंतानां रूपिणां विषमरूपाः के
वलविंदवोगराती याः। तेषां संमूह्य हस्ता छाभ्यां २ भजेत् यद्यके १ शेषो भवेत्तदा तेन स्वाई स्वादि कृते वक्रं धाफ
लप्राप्तिर्भविष्यतीति ब्रूयात् यदि भक्तेः शून्यं तिष्ठेत्तदा शून्यं फलं वाच्यम् अथ प्रकारांतरमाह प्रथमगृह
रूपिणां सप्तमगृहरूपिणा गुणयेत् तामागृत्यंतं पश्येत् यदि सप्रवेशी भवेत्पुनः सप्तदशमगृहे समा
गतः स्यात्तदा स्वादिकरणं वक्रसमीचीनं वर्त्तते। अत्रावश्यकरूपिणः प्रवेशित्वं निर्जमत्वं स्थिरत्वं द्वि
स्वभावत्वं चतथाः न्यादेशरूपकेंद्रपणफरमापोक्लिमगृहेषु अवभेतान् विलोकयेत्तदा प्रश्नतथ्य
तं प्रायात् नात्र संदेहः अथ यदि कोपि पृच्छेदद्ध्रुतराजनामां प्रति स्वादिं कर्त्तुं मिच्छुन्ति द्रष्टव्यं तेषां मध्ये
कः सत्यवादी तेन स्वाई स्वादिकरवानीत्यत आह तत्र प्रथमपुरुषस्य सप्तम ७ गृहम् द्वितीयस्याष्ट
मम् ८। तृतीयस्य नवमं ९ चतुर्थकस्य दशमम् १० तदा प्रत्येकगृहे पश्येत्। यस्मिन् गृहे शुभप्रवेशी

26

सप्तमगृहरूपिणांपश्येत् यदिशुभोभवेत्तदाप्रवासिनस्त्रवस्थासमीचीनावाच्या यद्यशुभोभवेत्तदातस्या
वस्थानिष्ठुतरावाच्या यदिसप्रवेशीवास्थिरोभवेत्तदासप्रवासीतस्मिन्नेवस्थलेवर्त्ततेप्रचलितोना
स्ति अथयदिनिर्जमोवाद्विस्वभावःस्यात्तदासप्रवासीतस्मात्स्थानात्प्रचलितइतिब्रूयात् नात्रसंदे
हः अथयदिपृच्छेत्सप्रवासीझटितिसेवागमिष्यतिवानास्तीत्यतआह तदातृतीय ३ नवम ९ चतु
र्दश १४ गृहेषुपश्येत्। यदिनिर्जमःसमागतःस्यात्तदाप्रवासीझटितिसेवसमागमेत्। यदित्रेषुगृ
हेषुप्रवेशीस्यात्तदास्थिरतयासमागमेत्। द्विस्वभावेस्युस्तदातस्यागमनेद्विविधत्वंवाच्यम्। यदिस्थिरः
स्यात्तदातस्यागमनेस्थिरत्वंब्रूयात् नात्रसंदेहः अथप्रकारान्तरमाह तृतीय ३ गृहरूपिणांनव
मगृहरूपिणांगुणायेत् ताभ्यामुत्पन्नंपश्येत्। यदिसमागतगृहेषुसमागतःस्यात्तदाप्रवासीझटितिसेव
गमेत्। यदिनोसमागतःस्यात्तदास्थिरतयासमागमेत् अथयदिकोपिपृच्छेदेकेनसार्द्धंसांटिंकरो

27

इति श्रीरमलरहस्ये सारसंग्रहे सप्तमगृहस्य प्रश्नकथनं नाम सप्तमोऽध्यायः ॥ अथाष्टमाध्याये आख्यायते
तस्मिन्नष्टमाध्याये ऽष्टमगृहप्रश्नकथनस्य व्याख्यानं वर्त्तते । तत्रादावष्टमगृहस्य विचारांशमाह स्व
विचारांशमाह साधारणभयस्य · मार्गे हि द्विविधत्वमयस्य विचारः मृत्युनो विचारः । हन्यमानस्य विचा
रांशः । तथा घातकपुरुषस्य विचारः हलाहलस्य च जलमग्नस्य विचारः । प्रवासिनो दूरस्थस्य चौरह
हस्तनो विचारः । मृत्युपरोक्षे द्रव्यादीनां भागयोग्यस्य विचारः ऋणप्रसंगेन द्रव्यस्य तथा ऋणस्य वि
चारः । स्त्रीद्रव्यस्य विचारः । यस्मिन्मृत्युपरोक्षे द्रव्यादीनां भागयोग्यो न कश्चिद्भवेत्तस्य द्रव्याणि पृ
थ्वीपतिकोषयोग्यानि भवन्ति · लोकभाषायां वैतनलमाल इत्युच्यते तस्य विचारः कर्त्तव्यः । भूमौ ।
स्थापितनिधेर्विचारः मित्रगृहस्य विचारः पितुर्मित्राणां विचारः यद्वस्तु नष्टं क्षीयमानं च स्यात्त
स्य विचारः । उपद्रवाधिकारस्य विचारः । शत्रुमित्रतस्करगणस्य ये तैः पक्षे न शरीरे न नष्टः स्यात्तस्य वि

भवेत्सराव पुरुषः सत्संवादीनेन सार्द्धं साटिकारणमसमीचीनम् । यत्राशुभनिर्ज्जमो भवेन्न दासत्त्ववादीनो
स्ति तेन सार्द्धं साटिकरणमसमीचीनम् यत्राशुभनिर्ज्जमो भवेन्न दासत्त्वं नरमित्यर्थः नात्र संदेहः अ
थ यदि कोपि केनापि सार्द्धं फटँकटं कारयेत्पुनः स एव यदि ज्ञातुमिच्छेदिदं फटकटं सत्संसर्ग्जेणवर्त्तते
वा नास्तीत्यत आह । यदि प्रश्ने एव फकटककारको भवेन्न दाऽष्टमगृहे पश्येत् । यद्यशुभो भवेन्न दासा मि
थ्याभार्ज्जेणाद्रव्यं ग्रहीतुमिच्छति कोर्थः परांशं फकटकबलेन ग्रहीतुमिच्छतीत्यर्थः अथ यदि शुभः
समागतः स्यान्न दासत्वमार्ज्जेणाद्रव्यं ग्रहीतुमिच्छति । फकटकबलेन स्वांशं ग्रहीतुमिच्छतीति भावः ।
अथ कोप्यन्यः पृच्छ्रासार्द्धं फकटकं कारयेत्पुनस्तदर्थं प्रश्ने यदि षष्ठे न्न दा तत्पुरुषगृहादष्टमगृहे
पश्येत् । यदि चाशुभो भवेन्न दासद्रव्यग्रहणार्थं मिथ्यारूपं फकटकं करोति । परांशं ग्रहीतुमिच्छती
ति भावः । यदि शुभो भवेन्न दासस्तत्स्वरूपं फकटकं करोति स्वांशग्रहणार्थम् नात्र संदेहः ॥८॥